
प्राची प्रज्ञा
E-Journal in Sanskrit

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

काव्यधारा

January - 2022

(समकालिकसंस्कृतकाव्यावतरणिका)

https://sites.google.com/site/praachiprajnaa/kavyadhara

# श्रीक्षेत्रमन्दाकिनी

डा.प्रदीप्तकुमारनन्दः

स्नानं वेद्यां रथगतिसुखं शायनं चायने द्वे
प्रावारश्च प्रतिदिनमहो चन्दनश्चापकेलिः ।
पार्श्वत्यागो दमनकसहोत्थानपुष्याभिषेका
भव्या यात्रा विपुलललिता द्वादशैव प्रसिद्धाः॥1॥

कृष्णं कीर्तय सुन्दरं शृणु कथां गोविन्दनाम स्मर
दारुब्रह्म समर्चय प्रियतमं सेवस्व पादौ चिरम् ।
सख्यं श्रीपुरुषोत्तमे प्रतिदिनं श्रीरामदासो भव
सर्वस्वात्मनिवेदनं कुरु हरौ तद्वन्दने नन्दय ॥2॥

व्यूहातीतसमस्तदृश्यपटलं तद्दारुदेहाश्रितः
सूक्ष्मस्थूलचतुष्टयैर्विलसितो वेदान्तसारोत्तमः ।
नित्यं तत्त्वमसि प्रधानपुरुषो मायामयो निर्जर
आस्ते मिष्टमहाप्रसादजनकः कैवल्यदाता हरिः ॥3॥

आजीवे यदि दुर्गतिः प्रविधिना याजिश्च नीलाचले
व्याजी मा भव वासुदेव मतिमन् वाजीव कार्यं चर ।
राजीभूतसमस्तदर्शनचये चाव्जी चिरं सुन्दरे
सज्जीभूतसमस्ततत्त्वपुरुषे राजीवनेत्रे मनः ॥4॥

एषा विष्णुपुरी महाजनचरी सिद्धान्तसर्वेश्वरी
नित्या नीलमणिप्रकाशसहजा तद्दारुकोलाग्रती ।
भेदाभेदविशेषतत्त्वगहनप्रत्यक्षदृश्याऽध्वरी
स्वाहाकारकरी प्रभातसमये सर्वार्थसिद्धिप्रदा ॥5॥

श्रीमद्गोविन्दचन्द्रो निखिलसहृदयो नीलजीमूतकान्तः
श्रीमद्राजाधिराजो रघुकुलतिलको नीलदूर्वादलाभः ।
श्रीसत्संगाधिरूढो विपुलपुलकितो ब्रह्मदारुप्रदीप्तः
श्रीसत्कारेषु भान्तः प्रविलसतुतरां प्रार्थनाकामधेनुः ॥6॥

तप्तस्वर्णसवर्णमंगनिचयं रक्तो रजश्चाधरः
आस्यं कृष्णकलाप्रमुग्धसरलं हास्यं जगन्मोहनम् ।
नेत्रे वीक्षणमुग्धदुग्धमधुरं भूगोलकोलाग्रतं
फुल्लं घ्राणविहारचित्रकुसुमं के वा तिरस्कुर्वते ॥7॥

बुद्धिं वर्धयते गुणं गणयते कृष्णश्च रामायते
चित्तं चोरयते स्वभक्तमहते कारुण्यमातन्वते ।
शिष्टान्पालयते खलान्दलयते कष्टं पराकुर्वते
भक्तिं प्रार्थयते महाप्रभुजगन्नाथाय तस्मै नमः ॥8॥

लीलां कोलकृते कलाकरवृते शार्दूलविक्रीडिते
वाञ्छाकल्पवटावृते तटधृते दारुप्रभाभास्वते ।
ज्येष्ठं श्रेष्ठयते शुभं प्रदिशते गीताकथां तन्वते
भक्तिं प्रार्थयते महाप्रभुजगन्नाथाय तस्मै नमः ॥9॥

श्रद्धारेणुमहासुखं विरहितः श्रीगुण्डिचाविह्वलः
रज्ज्वाकर्षणहीनदुर्बलतरो नन्दाभिधानोऽधमः ।
आशा वैतरणी प्रभातकिरणे श्रीमन्दिरे दर्शनं
चित्ते तीव्रवती करोति कवितां हा भाग्यहीनः कविः ॥10॥

केन्द्रापडा, ओडिशा

***

-